3. सील और रिवेट की हालत/Condition of seals and rivets..........................................

4. कहां उतारा गया—माल शेड या निजी साइडिंग पर ?/ Where unloaded, at goods shed or at Private Siding ?..........................................

5. क्या उतराई का पर्यवेक्षण वाणिज्य कर्मचारियों या रेलवे सुरक्षा बल द्वारा किया गया था ?
Was unloading supervised by a Commercial staff or R.P.F. ?..........................................

6. कमी/क्षति/उठाईगीरी का कारण/Cause of shortage/damage/pilferage..........................................

7. अन्य टिप्पणियां/Other re ..........................................

संलग्नक/Enclos.

1. मूल रेलवे रसीद/O.R.R.................. 2. क्षति एवं कमी संदेश/D.D. Message.................. 3. सील/Seals..................
4. बीजक की प्रतिलिपि/Copy of Beejuk.................. 5. गाड़ी परीक्षक का प्रमाण-पत्र/TXR Certificate..................

..........................................
स्टेशन मास्टर/Station Master

जिन मामलों में दावों का मूल्य 1000/- रु० से अधिक होने की सम्भावना है, वहां मामले के विस्तृत तथ्य देते हुए यथासम्भव कर्मचारियों का दायित्व निर्धारित करते हुए और निवारक उपायों का सुझाव देते हुए स्टेशन मास्टर/निरीक्षक द्वारा स्वयं एक विशेष रिपोर्ट तैयार करनी चाहिए और इस रिपोर्ट के साथ संलग्न करना चाहिए।

In case where monetary value of claim is likely to exceed Rs. 1000/- a special report giving detailed facts of the case, fixing staff responsibility to the extent possible and suggesting preventive measures should be prepared by the Station Master/Inspector personally and attached to this Report.

ॐ

नमः समस्तसिद्धेभ्यः

गोरक्षग्रन्थमालायामष्टपञ्चाशत्तमं पुष्पम्

पार्वतीपुत्रनित्यनाथसिद्धमत्स्येन्द्रविरचितः

# शावरचिन्तामणिः

## (शावरमंत्रोंका अद्भुत चमत्कार)

( पाठमात्रसे सिद्धिदायक विधिसहित )

शाके १८७८
संवत् २०१३
प्रथमावृत्तिः १०००

मूल्य
५)
५/

योगप्रचारिणी
गोरक्षटिल्ला मन्दाकिनी
काशी ( वाराणसी )

ॐ

# ग्रन्थागमः

गौरीपुत्रनित्यनाथसिद्धमत्स्येन्द्रोपदिष्टोऽयं शाबरचिन्तामणिर्मन्त्रशास्त्रम् । राजस्थानविक्रमनगर ( बीकानेर ) नरेशगङ्गासिंहराजगुरुयोगिराजनवलनाथपुस्तकालस्थदाक्षिणात्यलिपिबद्धप्राचीनतालपत्रपुस्तकोद्धृतत्रिचतुश्शतवर्षप्राचीनपाण्डुलिपेः प्रतिलिपिः पाटेश्वरीपीठाच्छ्रीनाथसम्प्रदायसाहित्यसङ्ग्रहशीलेनानुसन्दधानेन जनेनानेन नवलनाथशिष्यमान्त्रिकभिषजो नियमनाथस्य सौजन्याद्विहिता । तस्मिन्नेवाब्दे (वि० सं० २००४) कार्त्तिके मासि गोरक्षराज्यस्थितैतिहासिकग्रन्थसङ्ग्रहार्थं प्रतिप्रस्थितेन नेपालमण्डलसिद्धाचलमृगस्थलीशिवगोरक्षसिद्धाश्रमस्थितेन काष्ठमण्डपघण्टागृहस्थ राजकीयपुस्तकालयप्रभृतिपुस्तकालयान् स्थले स्थले परिशीलयता विनीतो बहुतिथः समयः । येन नास्य प्रकाशेऽवकाशः प्राप्तः । इदानीं समग्रगोरक्षराष्ट्रेतिहासप्रकाशयोजनायां प्रवृत्तेन राजधान्याः प्रतीच्यां कर्णालीप्रदेशस्यैतिहासप्रकाशप्रसङ्गात्काशीगोरक्षटिल्लायोगप्रचारिणीकार्यालयमभ्युपेतेन योगप्रचारिणीसभोपाध्यक्षपीरचन्द्रनाथयोगिनोऽनुरोधात्तेनैव सह हिताय साधकजनानामहितहतये तमेतं शाबरचिन्तामणिं चिन्तामणिकल्पं गोरक्षग्रन्थमालायां सङ्ग्रथ्य कण्ठदेशे पाठकानां निक्षेप्तुं विहितोऽयं प्रयत्नः ।

साधकजनचिन्तामणिरयं शाबरमन्त्रचिन्तामणिर्मत्स्येन्द्रनाथकथितः । मत्स्येन्द्रनाथ, मत्स्यनाथ, मीननाथ, नित्यनाथ, नित्यानन्दनाथ, सिद्धनाथ, सिद्धराज, सिद्धेश्वर, मङ्गलेश्वर, लोकेश्वर, लोकनाथ, मञ्जुश्री, मञ्जुनाथ, आदिनाथ, लोकेश, अवलोकितेश्वर, लोकितेश्वर, आर्यलोकेश्वर, आर्यावलोकितेश्वर, करुणामय, करुणाकर, कारुणिक, महाकारुणिक, पद्मपाणि, नीलोत्पलपाणि, पुण्डरीककर, सरोजी, कमली, अब्जी, अमिताभ, सहस्रबाहु, भास्कर, महाप्रकाश, पार्वतीपुत्र, गौरीपुत्र, शिवसुत, शिवमानसपुत्र, कामरूपेश्वर, तौलवेश्वर, योगिराज, गोरक्षगुरु, प्रभृतीनि प्रसिद्धानि विविधकर्मभिर्विविधनामानि विविधग्रन्थेषु विविधलोकेषु च विभोर्विलोक्यन्ते ।

शाबरचिन्तामणौ शान्तिक-वश्य-स्तम्भन-विद्वेषणोच्चाटन-मारणकर्माणि क्रमेण षट् तेषां क्रमाद्देवता रति-वाणी-रमा-ज्येष्ठा दुर्गा-कालिकाः । आन्ध्र-गुर्जर गौड-केरल-कर्णाटेश्वरान् पञ्च शिष्यान् प्रथमं संस्कृते तत आन्ध्री-गुर्जरी-गौडी-केरली-कर्णाटीभाषासु क्रमेण शाबरान् षट् कर्ममन्त्रानुपदिदेश देशिको मत्स्येन्द्रनाथः । दशपटलपर्यन्तमुपक्रान्तानि षट् कर्माणि, समाप्तानि । आकर्षणादिप्रयोगो हनुमच्छाबरनामा पटल एकादशोऽतिरिक्तोऽनुबद्धः प्रतिभाति । तथैवादौ श्रीनकेसरीम् प्रभृतीनि पदानि पद्यानि चानुयोजितानि दृश्यन्ते देशकालपात्रलिपिप्रतिलिपिपरम्पराविप्रकर्षात् खण्डितं सन्दिग्धञ्च स्थले स्थले मन्त्रशास्त्रमिति प्राचीनमैतिहासिकमिति तथैव प्रकाशितम् ।

योगी नरहरिनाथः
मृगस्थलीगोरक्षपीठनिष्ठः
२०१३।३।२१।४



मृगस्थल्यां सिद्धाचलशिरसि सिद्धाश्रमपदे
समासीनं सिद्धासनमखिलसिद्धार्चितपदम् ।
अलक्षं गोरक्षं लसदमरवृक्षं क्षतभयं
चिदानन्दं वन्दे सुरमुनिमिलिन्दोदितजयम् ॥
प्रसिद्धेयं काशी दिशि दिशि विकाशीकृतयशा
यतो भग्नः पाशी जनिमृतिविपाशीकृतजना ।
स्थिरो यस्यामाशीविषरुगविनाशी शिवगुरुः
पदे गङ्गा दासी सकलसुखराशी रसवती ॥
तत्त्वानीह हि पञ्चविंशतितया कोष्ठानि निम्बद्रुमौ
धर्मार्थौ रसकूपचन्द्र उदितो योगप्रचारः क्रिया ।
षट्चक्राणि च मन्दिराणि सुमतिर्वाटी सुषुम्णा गुहा
मोक्षद्वारमथैक्ययोग इति सा गोरक्षटिल्ला स्थली ॥
यं योगाङ्कुरमादिनाथ उमया युक्तोऽभियुक्तात्मने
मत्स्येन्द्राय जलन्धराय च ददौ गुमञ्च सिक्तञ्च तम् ।

गोरक्षोऽ त्तनपत्रपुष्पफलतः कैवल्यकल्पं व्यधाद्
योगाचार्यचतुष्टयी विजयते योगप्रचारोज्ज्वला ॥
प्राक्प्रत्यग्दक्षिणोदङ्निखिलजनपदेभ्योऽथ गोरक्षराष्ट्रा-
द्राजस्थानाच्चितैस्तैरखिलयमिजनैर्गुम्फिता ग्रन्थपुष्पैः ।
गुञ्जत्सिद्धालिमाला शुभगुणसुरभिः सद्रसा योगसूत्रा
गोरक्षग्रन्थमाला विलसतु सततं कण्ठदेशे जनानाम् ॥
अनुवादकसम्पादकसंशोधकसङ्ग्रहादिकर्तारौ ।
योगी नरहरिनाथःपीरःश्रीचन्द्रनाथश्च ॥१॥

## शाबरमन्त्रोंका प्रभाव

"घेघे शरभाय असि शरभ सालुवा ग्लौं शरभाय निरोग माडु मुंईल्ल दिद्दरे महामायि आणे महेश्वरे आणे" इत्यादि शाबर मन्त्रों की उपयोगिता के लिये भक्तवर्य तुलसीदासजीने भी रामायण में कहा है—

कलि विलोकि जग हित हर गिरजा । सावर मंत्र जाल जिन्ह सिरजा॥
अनमिल आखर अरथ न जापू । प्रगट प्रभाउ महेश प्रतापू ॥

तुलसीदासजी न केवल शाबर मन्त्रोंमें विश्वास ही रखतेथे अपिच इन मन्त्रों के चमत्कारी प्रयोगों से पूर्णतया परिचित भी थे, प्रेतदर्शन, हनुमत्प्राप्ति आदि तुलसीदास की जीवनघटनायें इस बात को सिद्ध करती है । इतना अवश्य है कि साधु सन्त पुरुष सात्त्विक वृत्ति से इह लोक और परलोक के कल्याण के लिये ही शाबर मन्त्रों को उपयोग में लाते हैं और सद्यः सिद्धि प्राप्त करके परकार्य को भी अतिसुगम बनाने में सहयोग देते हैं

"शाबरचिन्तामणिः—अति प्राचीन ग्रन्थ हैं, आजतक प्रकाश में आये हुए शाबर मन्त्र शास्त्रों में यह सर्वोत्कृष्ट है। इसके सम्बन्ध में अधिक कुछ कहना भी अत्यल्प ही होगा, साधकगण ही स्वयं प्रमाण हैं।

## चन्द्रशेखरो जयति

भिखारीनाथधर्मज्ञः कृपया समलङ्कृतः ।
मेघनाथस्तु शिष्योऽभूद्यस्य सर्वजने दया ॥
रूपनाथस्तस्य वंश्यो महसां राशिरुज्ज्वलः ।
हंसनाथस्तस्य शिष्यो महादेवसमो ह्यभूत् ॥
दिलीपनाथस्तच्छिष्यस्त्यक्तसंसारबन्धनः ।
नाथान्तेनावसानेन तत्ख्यात्यै (धर्म) स्वर्गसिद्धये ॥
तेनेदं निर्मितं कूपं शिवालयमलङ्कृतम् ।
भव्यकारिशिवप्रीत्यै काशिकायां मनोरमम् ॥
विक्रमस्य गते वर्षे शून्यषण्नागचंद्रके ॥१८६०॥
शालिवाहशके रम्ये शरयुग्माद्रिचन्द्रके ॥१७२५॥
ऊर्जे मासि सिते पक्षे चतुर्थ्यां बुधवासरे ।
अनुराधाख्यनक्षत्रे शुभलग्नसमन्विते ॥

शिवालयमिदं भिखारीनाथस्य

टिप्पणी—दूसरे शिलालेखमेभी यही श्लोक हैं केवल अन्तमें–विश्वनाथाय नमः । शिवालयमिदं मेघनाथस्य । ऐसा लिखा है ॥

स्वस्ती श्रीसंवत् १८२८ ( १७२७ ) हरहरनाथ की मढी म लागा रुपय्या २२६ बनाये कासीनाथजीने सुभ —

( वि० सं० १८२८ में वर्तमान भाषाका रूप कैसा था ? यह काशी गोरक्षटिल्ला गोरक्षनाथके मन्दिरके आगे सिद्ध (पीर) हरहरनाथजीके जीवत्समाधिमन्दिरके इस उपर्युक्त शिलालेखसे दिग्दर्शन होता है । संवत् के अङ्क १८ या १७ के सन्देह में हैं )

---

पीर चन्द्रनाथ सन्धैव

श्रीनाथाय नमो नमः सिद्धेभ्यो नमो गुरुभ्यो नमः सकलदेवताभ्यः

गोरक्षग्रन्थमालायामष्टपञ्चाशत्तमं पुष्पम्

पार्वतीपुत्रनित्यनाथसिद्धमत्स्येन्द्रविरचितः

# शाबरचिन्तामणिः

ॐकारवाचकं साक्षान्महोग्रं श्रीनकेसरीम् ।
हृदि ध्यात्वा प्रवक्ष्यामि यत्तत्सिध्यति मे वचः ॥१॥
प्रयोगरूपिणं वीरं महोग्रं श्रीनकेशरीम् ।
हृदि ध्यात्वा प्रवक्ष्यामि यत्तत्सिध्यति मे वचः ॥२॥
वर्णात्मकं वर्णमयं महोग्रं श्रीनकेसरीम् ।
हृदि ध्यात्वा प्रवक्ष्यामि यत्तत्सिध्यति मे वचः ॥३॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
वाग् विभूती रमा गौरी सन्तु मे कार्यसिद्धये ॥४॥

पार्वत्युवाच—भूसुरार्चित भूतेश शेषकङ्कण शङ्कर ।
लङ्केशार्चितपादाब्ज नमस्ते शाङ्करीपते ॥५॥
सप्तकोटिमहामन्त्रा उपमन्त्रा अनेकशः ।
त्वत्कटाक्षान्महादेव श्रुता मे साम्प्रतं प्रभो ॥६॥
भूतले शाबरो मन्त्रो वर्तते साधकं विना ।
पाठात्सिद्धिकरीं विद्यां पावनीं वद मे प्रभो ॥७॥

ईश्वर उवाच—मम मानसपुत्रोऽस्ति मत्स्येन्द्राख्यो महाबलः ।
गौडकेरलकर्णाटा आन्ध्रगुर्जरदेशकौ ॥८॥
शिष्यपञ्चकसंयुक्तस्तपश्चक्रे सुदारुणम् ।
ततः प्रसन्नो भगवान् हंसरूपी परात्परः ॥९॥

हंस उवाच—किमस्ति कांक्षितं ब्रूहि आदिनाथ परात्पर !
असाध्यमपि योगीन्द्र ददाम्येतद्व्रतं मम ॥१०॥

## संक्षिप्त भावार्थ—

पार्वतीने महादेवसे प्रश्न किया हे महेश्वर ! सात करोड़ महामन्त्र और अनेक उपमन्त्र आपके कृपाकटाक्षसे हमने सुना। अब भूतलमें शाबरमन्त्र साधकके बिना है। पाठमात्रसे ही सिद्धिकरी. पावनी उस शाबरी विद्याका उपदेश कीजिये। इस पर ईश्वरने कहा—मेरा मानसपुत्र मत्स्येन्द्रनाथ नामका महाबली योगी है। उसने गौड केरल कर्णाट आन्ध्र और गुर्जर देशके राजा ५ शिष्योंके साथ दारुण तप किया। हंस रूपी परात्पर भगवान् प्रसन्न होकर बोले—हे परात्पर आदिनाथ ! मत्स्येन्द्र ! वरं ब्रूहि। हेयोगीन्द्र ! असाध्य वस्तु भी देता हूँ यह मेरा व्रत है ॥१०॥

आदिनाथ उवाच—प्रत्येकं मन्त्रशास्त्रञ्च कापालिकमतानुगम्।
कामाचारविहीनन्तु कल्पयाम्यहमादरात् ॥११॥
कटाक्षमस्ति चेद्देव वदात्रागममादरात्।
यं यं मन्त्रोक्तफलदं कुरु चिन्मयविग्रह ॥१२॥
एवं तद्वचनं श्रुत्वा हंसरूपी सदाशिवः।
भद्रं भवतु योगीन्द्र लभेद्वाञ्छितमादरात् ॥१३॥
इत्युक्त्वा तु महेशस्तु ददौ तादृशतां ययौ।
आदिनाथस्तु गिरजे शिष्यानध्यापयन्मनुम् ॥१४॥
तस्य तस्यैव भाषायां मन्त्रांस्तज्जपलक्षणम्।
प्रयोगं चोपसंहारमुक्तवान् स च पार्वति ॥१५॥
षट्कयोगात्क्रमेणैव देवता मन्त्रमादरात्।
आदौ तु देवता वक्ष्ये मत्स्येन्द्रोक्ताः सुसिद्धिदाः ॥१६॥
रतिर्वाणी रमा ज्येष्ठा दुर्गा चैव तु कालिका।
षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत् ॥१७॥
तस्य पूजां च कृत्वा तु पश्चात्तं मन्त्रमादरात्।
चिन्तितञ्च भवेद्देवि नात्र कार्या विचारणा ॥१८॥
अर्चयेद्देवतामादौ जपेन्मन्त्रं कुलेश्वरि।
जपेत्सिद्धिमवाप्नोति शाबरं चाद्भुतं मनुम् ॥१९॥
षट्कर्मनामकं वक्ष्ये शृणु पर्वतनन्दिनि।

प्रथमं शान्तिकं कर्म वश्यं चैव तदुत्तरम् ॥२०॥
तृतीयं स्तम्भनं कर्म विद्वेषं च चतुर्थकम् ।
उच्चाटनञ्च गिरजे पञ्चमं कर्म चादरात् ॥२१॥
षष्ठञ्च मारणं कर्म मन्त्रशास्त्रेषु निश्चितम् ।
लक्षणं तस्य वक्ष्यामि तव पर्वतनन्दिनि ॥२२॥
वातजं पित्तजं चैव श्लेष्मोद्भवमतः परम् ।
एवं विविधरोगादीन् कृत्रिमादीननेकशः ॥२३॥
अनुभूतप्रयोगञ्च विश्वशान्तिरिहोच्यते ।
विधेयं जीवजातीनां वशीकरणमुच्यते ॥२४॥
प्रवृत्तिरोधनं देवि स्तम्भनं तदुदाहृतम् ।
अत्यन्तमैत्रीनाशश्च विद्वेषणमुदाहृतम् ॥२५॥
भ्रान्त्या देशपरित्यागो भवेदुच्चाटनं तथा ।
प्राणिनां प्राणहरणं मारणं शास्त्रसम्मतम् ॥२६॥
मारणञ्च न कर्त्तव्यं प्राणैः कण्ठगतैरपि ।
मारणे निरयप्राप्तिरिहैव कुलसुन्दरि ॥२७॥

इतिश्रीपार्वतीपुत्रादिनाथसिद्धविरचिते शाबरचिन्तामणौ पञ्चद्राविडशाबरविधिर्नाम प्रथमः पटलः ॥१॥

तत्र आदिनाथ मत्स्येन्द्र बोले—कामाचाररहित कापालिक मतका प्रत्येक मन्त्रशास्त्र तो हम प्रतिपादित करते हैं। हे देव ! यदि आपका कृपाकटाक्ष है तो आगमका उपदेश कीजिये। हेचिन्मयविग्रह ! मन्त्र देवता विधि फल सब कहिये। एवं प्रकार मत्स्येन्द्रनाथ के वचन सुन कर हंसरूपी सदाशिव बोले—हे योगी ! कल्याण हो, वाञ्छित फल प्राप्त होगा। ऐसा कहकर परम शिवने मत्स्येन्द्रको मन्त्रोपदेश किया और अन्तर्धान हो गये। तदनन्तर आदिनाथ मत्स्येन्द्रने जो जो शिष्य जिस जिस देशका था, उसीकी भाषामें उसको मन्त्रोपदेश किया और जप-विधि, लक्षण, प्रयोग, उपसंहार, षट्कर्मयोगके क्रमसे देवतादि सब शिक्षा दीक्षा दी। आदिमें मत्स्येन्द्रोक्त सिद्धिदायक देवता कहेंगे—रति, वाणी, रमा, ज्येष्ठा, दुर्गा, कालिका ये षट्कर्म देवता हैं, कर्मके आदिमें

इनकी पूजा करे। देवताकी पूजा करके तदनुसार मन्त्रको जपे अवश्य मनोवाञ्छित कार्यसिद्धि होती है, इसमें कोई सन्देह नहीं। हे कुलेश्वरि! आदिमें देवताकी पूजा करे, तब मन्त्र जपे, शाबरमन्त्र अद्भुत है, जपसे ही सिद्धि प्राप्त हो जाती है। षट्कर्मों के नाम—शान्तिक, वश्य, स्तम्भन, विद्वेषण, उच्चाटन, मारण, ये ६ कर्म मन्त्रशास्त्रोंमें निश्चित हैं। वातज पित्तज श्लेष्मज इत्यादि विविध रोगादि अनेक कृत्रिम लक्षण हैं। अनुभूत प्रयोग, विश्वकी शान्तिके लिए जो किया जाता है, उसको शान्तिक कहते हैं। समस्त जीव जातियोंको अपने वशमें करना वशीकरण है। समस्त जीवोंकी प्रवृत्तियोंको रोक देना स्तम्भन है। मित्रताका अत्यन्त नाश विद्वेषण कहलाता है। भ्रान्तिसे देशका परित्याग उच्चाटन होता है। प्राणियोंका प्राण हरण करना मन्त्रशास्त्रोंमें मारण कहा जाता है। किन्तु हे कुलसुन्दरि! प्राण संकट में भी मारण तो नहीं करना चाहिये, क्योंकि मारणसे इसी लोकमें नरक भोगना पड़ता है।

## द्वितीयः पटलः

ॐकाररूपममलं महोग्रं श्रीनकेसरीम्।
हृदि ध्यात्वा प्रवक्ष्यामि यत्तत्सिध्यति मे वचः ॥१॥

पार्वत्युवाच—शाबरं मन्त्रशास्त्रञ्च विनायासतपःफलम्।
वद मे देवदेवेश करुणाकर शङ्कर ॥१॥

ईश्वर उवाच—चन्दनं मृगनाभिञ्च कर्पूरं रोचनां तथा।
चक्रिहस्तमृदं नीत्वा चक्रभ्रमणवेलया ॥२॥
मृत्तिकाञ्च कुलेशानि गृहीत्वा च समं समम्।
तेनैव पुत्तलीं कुर्याच्चतुर्बाहुष्टमण्डलीम् ॥३॥
चतुरङ्गुलमात्रन्तु यवमात्रन्तु निश्चितम्।
अङ्गुष्ठमात्रं तद्देहं सर्वावयवशोभितम् ॥४॥
भानुवारे समाराध्य ह्यर्चयेच्च रतिप्रियम्।
त्रिकालमेककालं वा कार्यलाघवगौरवात् ॥५॥

अनुरोध्य वेदमन्त्रं जपेत्कल्पोक्तमार्गतः ।
तं मन्त्रञ्च प्रवक्ष्यामि तव पर्वतनन्दिनि ॥६॥

चन्दन, कस्तूरी, कपूर, रोचना, चक्र घूमते समयकी कुम्हारके हात की मिट्टी, सबको बराबर लेकर चतुर्भुज अष्टमण्डल पुत्तली बनावे। ४ अङ्गुल जव प्रमाण, अंगुष्ठमात्र सर्वाङ्ग सुन्दर देहका प्रमाण है। रविवारको आराधना कर कामदेवकी पूजा करे। कार्यके लाघव गौरवसे त्रिकाल अथवा एक समय वेद मन्त्रके अनुरोधसे कल्पोक्त विधिसे जप करे। मन्त्र यह है –

ॐ क्लीं ऐं सौं ग्लौं हुँ ईं कँ कंदर्पशक्तिसकलकलाकलाप-निपुणे, इक्षुशरासनपञ्चबाणान्विते, सकलरोगनिर्नाशने, खगान् मारय मारय। क्लीं रसाम्बायै, एहि एहि स्वाहा ॥७॥

रहस्यं मन्त्रमनघे शान्तिकर्मसु योजयेत्।
मनुं षष्टिवर्णमयं सद्यः सिद्धिकरं कलौ ॥८॥
अशोककुसुमेनैव ह्यर्चयेदपि देवताम्।
पायसापूपगव्यञ्च मूलेनैव निवेदयेत् ॥९॥
एवं क्रमानुरूपेण लक्षमेकं जपेन्नरः।
तदर्धमर्धं वा शुद्धो जपेत्सिद्धिमवाप्नुयात् ॥१०॥
दर्भैर्वा श्वेतदूर्वाभी राज्या वा सर्षपेण वा।
अयुतञ्च हुतं देवि कार्यसिद्धिमवाप्नुयात् ॥११॥
रोचनां मृगनाभिञ्च कर्पूरञ्च समं समम्।
नद्याः समुद्रगामिन्या उभयोस्तटसम्भवाम् ॥१२॥
मृत्तिकां चैव सङ्गृह्य पलमेकं समादरात्।
हस्तर्क्षे चार्कवारे तु सङ्ग्रहेत्साधकोत्तमः ॥१३॥
देवतोपरि संस्थाप्य भृगुवारावधेस्तथा।
तद्वासरे कुलेशानि शारदाकृतिपुत्तलीम् ॥१४॥
चतुर्भुजां द्विनयनां कमलासनसंस्थिताम्
लेखनीं पुस्तकं चैव वराभयकरं तथा ॥१५॥
पलाशमूलमाश्रित्य चम्पकैर्वा समन्तकैः।

अर्चयन्निशि काले तु मधु चैव निवेदयेत् ॥१६॥
वाणीमयं महामन्त्रं सिद्धशावरमेव च।
प्रजपेद्गुरुमार्गेण वश्यसिद्धिकरं परम् ॥१७॥

रहस्य मन्त्रको शान्ति कर्मों में लगावे। कलिकालमें तत्काल सिद्धि-दायक वह ६० अक्षरों का मन्त्र है। अशोक पुष्पसे देवताकी पूजा करे, पायस अपूप और गव्य (गौका दही, दूध, घी, गोमूत्र, गोमय,) मूलमन्त्रसे नैवेद्य अर्पण करे। एवं क्रमसे एक लाख जप करे। असक्त हो तो ५०००० या २५००० शुद्ध होकर जपे। सिद्धि होगी। कुश, श्वेत दूब, राई, सरसों, से १०००० दश हजार आहुति हवन करे कार्य सिद्ध होगा। रोचना, कस्तूरी, कपूर, समभाग लेवे तथा समुद्रपर्यन्त जानेवाली नदीके वार पार दोनों तट की १।१ पल मिट्टी आदरसे हस्त नक्षत्र रविवारमें लेवे साधक इन वस्तुओंका संग्रह करे। भृगु-वारसे उस मिट्टीको देवताके उपर रख कर उसी वारमें शारदा की पुतली बनावे चतुर्भुज द्विनेत्र कमलासन पर बैठी लेखनी पुस्तक वर अभय धारण करती हुई उस शारदा की ढाकके जड़में स्थापना कर रातको चम्पक या समन्तक पुष्पोंसे पूजा करते हुए मधुका नैवेद्य चढावे। वाणीमन्त्र महामन्त्र सिद्धशावरको गुरु मार्गसे जप करे। वश्यसिद्धि होती है। मन्त्र यह है—

ॐ ऐं ओं औं हँ हाँ ग्लौं हुँ क्षं सर्वजीववशकरी। त्रिजगन्मोहिनी त्रैलोक्यं मे वशमानय। एहि एहि ब्रह्माणि वर्णमये सकलशब्दमये सर्वं मे वशमानय स्वाहा।

वशीकरणबाणं तु शावरं सिद्धनिर्मितम्।
अष्टपञ्चाशद्वर्णास्तु पाठात्सिद्धिप्रदा नृणाम् ॥१८॥
खाने पाने प्रदातव्यं लेपनोद्धूलनादिभिः।
मन्त्रितं शतवारन्तु वशीकरणमाप्नुयात् ॥१९॥

पार्वत्युवाच—शान्तिक……………… ………।
वशीकरण……………… ………॥२०॥
पूर्वोक्तविधिना देवि पुत्तलीञ्च हरिद्रया।

कृत्वा तु पूजयेद्देवीं भार्गवीं लोकमातरम् ॥२१॥
कुसुमैः पीतवर्णैश्च पीतद्रवैस्तु होमतः ।
स्तम्भनञ्च भवेद्देवि मूलमन्त्रेण साधकः ॥२२॥
तन्मन्त्रञ्च प्रवक्ष्यामि तव यत्नेन सुव्रते ।
पाठमात्रेण देवेशि स्तम्भनं देवतादिभिः ॥२३॥

ॐ ह्लीँ च्लूँ इ हूँ श्रीँ श्रीमहामक्ष्मी सकलजन्तुवृत्तिरोधिनी स्तम्भय २ एहि २ हुँ फट् ।

त्रयस्त्रिंशद्वर्णमयं स्तम्भनास्त्रं सुखावनम् ।
जपेद्वापि पीतवस्तु होमात्स्तम्भनमाप्नुयात् ॥२४॥

इति स्तम्भनम्.

सिद्धनाथ मत्स्येन्द्रोपदिष्ट वशीकरण शाबरमन्त्रमें पाठ मात्रसे सिद्धिदायक ५८ अक्षर हैं। इस मन्त्रसे १०० वार अभिमन्त्रित कर कोई वस्तु खान पान लेपन परिधान बन्धनादि किसीमें देनेसे भी वशीकरण होता है। शान्तिक...वशीकरण....। पूर्वोक्त विधिसे हल्दीकी पुत्तली बना कर लक्ष्मीकी पूजा करे। पीले पुष्प पीलेद्रव (घी तेल हल्दी आदि) होम करनेसे और मूल मन्त्रके जपसे स्तम्भन होता है। पाठ मात्रसे देवतादियोंका भी स्तम्भन सिद्धि करनेवाला यह मन्त्र है ॐ ह्लीं इत्यादि उपर्युक्त ३३ अक्षरका स्तम्भन मन्त्र जप कर पीत (प्रेत) वस्तु होम करनेसे स्तम्भन सिद्धि होती है ॥

श्मशानभस्म चादाय भौमवारे तु बुद्धिमान् ।
तैलं करञ्जं देवेशि गृहीत्वा तु समं समम् ॥२५॥
पूर्ववत्पुत्तलीं कृत्वा ह्यर्चयेन्निम्बमूलतः ।
निम्बपत्रैरर्कपत्रैरर्चयेन्नियतव्रतः ॥२६॥
जपाद्वा होमतो देवि सद्यः सिद्धिकरं परम् ।
निम्बार्कपत्रहोमैर्वा काकोलूक (कंकोलक) दलेन वा ॥२७॥
राजिकालवणैर्वापि धत्तूरककरञ्जयोः ।
बीजहोमेन देवेशि सद्यो विद्वेषणं भवेत् ॥२८॥

ॐ ह्रीँ धर्मटिके २ कर्मटिके २ घोरे घोरतरे अमुकामुकयो-र्विद्वेषणं कुरु २ स्वाहा। काकोलूकवद्-गोव्याघ्रवद् मर्जारमूषकवद् विद्वेषणं कुरु २ ज्येष्ठायै जगत्त्रयविद्वेषकारिणि एहि २ ग्रं ग्रं स्रीं हुँ फट् स्वाहा।

एवं ज्येष्ठामयो मन्त्रः पाठात्सिद्धिकरः परः।
अत्यन्तमन्त्रतो देवि जपाद्विद्वेषणं भवेत् ॥२९॥

इति विद्वेषणं पूर्णम्

मङ्गलवार में श्मशानभस्म, तेल, करञ्ज, सम भाग लेकर पूर्ववत् पुतली बना कर नीमके मूलमें नीमके पत्र आकके पत्रों से पूजा करे जप होम करे तो शीघ्र सिद्धि होती है। नीम आकके पत्रों के होमसे या काक उल्लू के पंखोंसे या कंकोलके पत्तोंसे राई नमक अथवा धतूरा और करञ्ज के बीजके होमसे तत्काल विद्वेषण होता है। ॐ ह्रीँ इत्यादि ज्येष्ठामन्त्र के पाठ से सिद्धि होती है, एवं जपसे विद्वेषण होता है।

कुलालहस्तविभ्रष्टां पूर्ववत्सङ्गृहेन्मृदम्।
श्मशानभस्म विमलं तदन्नञ्च समं समम् ॥३०॥
खल्वेन चूर्णितं देवि कुर्याद् गामतन्द्रितः।
सर्वाङ्गेण च सम्पूर्णां शिरीषकुसुमेन च ॥३१॥

ॐ नमो भगवते जातवेदसे दुर्गायै जगज्जीवनकारिण्यै हुँ ग्लौँ दुँ दुर्गायै उच्चाटय २ एहि २ हुँ फट् स्वाहा।

एतन्मन्त्रं जपेद्वाथ राजीलवणमिश्रितम्।
होमाद्वा कार्यसिद्धिश्च भवत्येव न संशयः ॥३२॥

इति, उच्चाटनम्

पूर्ववत् कुम्हारके हाथसे गिरि मिट्टी, निर्मल श्मशानभस्म, श्मशान-अन्न सब समभाग लेकर खलमें चूर्णकर सर्वाङ्गपूर्ण दुर्गाकी पुत्तली बनाकर शिरीषपुष्पसे पूर्ववत् पूजा करे, और ॐ नमो...इत्यादि मन्त्रका जप करे राई नमक मिश्रित होम करे तो कार्यसिद्धि होती है। यह उच्चाटन विधि है।

श्मशानभस्म तत्काष्ठं तदङ्गारं च पार्वति ।
तदन्नपिण्डं तच्छूर्पं तद्रज्जुं च समं समम् ॥३३॥
खल्वेन पेषयेत्सर्वं निम्बतैलेन मिश्रितम् ।
कालीं करालवदनां मधुपात्रसमन्विताम् ॥३४॥
खड्गपाशाङ्कुशैर्युक्तामर्चयेत्प्रेतकानने ।
ली (नी) लापुष्पैः समभ्यर्च्य बलिं दद्यात्तु कुक्कुटम् ॥३५॥
यमघण्टकवेलायां रविवारे समर्चयेत् ।
मन्त्रं जपेत्कुलेशानि मारणं निश्चितं मतम् ॥३६॥

ॐ हुँ३ घ्रु ँ घ्रु ँ सिं हुँ कालि कालि कालरात्रि अमुकं पशुं ग्रह्ण (गृह्ण) २ हुँ फट् स्वाहा ।

एतत्कालीमहामन्त्रं भौमवारे समारभेत् ।
निशायामयुतं जप्त्वा कार्यसिद्धिमवाप्नुयात् ॥३७॥
अथवा जुहुयाद्देवि पाषाणं तैलमिश्रितम् ।
तिलतैलेन संयुक्तं मासहोमेन पार्वति ॥३८॥
शाल्मलीकुसुमैश्चैव तिलतैलेन मिश्रितम् ।
मारणञ्च भवेद्देवि नात्र कार्या विचारणा ॥३९॥

पार्वत्युवाच —.............................................

इतिश्रीपार्वतीपुत्रनित्यनाथसिद्धमीननाथनिर्मितशाबरचिन्तामणौद्वितयः पटलः

श्मशानका भस्म. काष्ठ. अंगार. अन्नपिण्ड. सूप. रस्सी. इनको बराबर लेकर खल कर नीमके तेलसे मिला कर कराल वदनवाली मधुपात्र खड्ग पाश अङ्कुशोंसे युक्त कालीकी पुत्तली बना कर श्मशानमें ली (नी)ला पुष्पोंसे पूजाकर कुक्कुटबलि देवे। रविवार यमघण्टकवेलामें पूजा करे और मन्त्रका जप करे निश्चित मारणसिद्धि होती है। ॐ हुँ३ इस काली-महामन्त्रका जप भौमवारमें आरम्भ करे, रात्रीको दश हजार जप करने से कार्यसिद्धि होती है। अथवा तिलका तेल मिलाकर पाषाणका एकमास हवन करे, या तिलके तेलसे सीमलके पुष्पोंको मिला कर होम करें तो मारणसिद्धि होती है।

## तृतीयः पटलः

पार्वत्युवाच—यदुक्तञ्चादिनाथेन पञ्चद्राविडनिर्मितान् ।
मन्त्राञ्छिष्योपदिष्टांश्च वद मे करुणाकर ॥ ॥
ईश्वर उवाच—ऐश्वर्यमनघं देवि सर्वेषां वाञ्छितं फलम् ।
सम्मोहनं साधकानां वक्ष्ये सिद्धिप्रदं कलौ ॥२॥

ॐ क्लीँ ऐँ सौँ ह्रीँ श्रीँ ग्लौँ हुँ सकलजगन्मोहिनि मदनोन्मादिनि क्लीं एहि २ क्लीं क्लीं सम्मोहय २ बुद्धिं नाशय २ । जीवमोहनी लागों मोह जिनु जिनु जावो मकरे तो मोहं आदिशक्तिको आण राजा मन्मथकी आन । फुरो आगममन्त्रो मेरी भक्ति गुरुकी शक्ति । ईश्वर तेरी वाचा ।

अयं सम्मोहनो मन्त्रो ह्यादिनाथेन पार्वति ।
शिष्याय गौडदेश्याय सम्यगध्यापितस्तथा ॥३॥
मन्त्रितञ्चान्नपानादि सम्मोहनकरं परम् ।

सप्तमातृकासन्निधावुपविश्य सप्तमातृकाः सम्पूज्यैकविंशतिदिनपर्यन्तं जपेन्मन्त्रसिद्धिर्भवति । ततः प्रयोगविधावेकविंशतिवारं खाद्यपानविलेपनोद्धूलनादिवस्तूनि संमन्त्र्य दीयमाने सम्मोहनं भवति ॥४॥

पार्वतीने पूछा—हे करुणाकर ! आदिनाथमत्स्येन्द्रने जो पञ्चद्राविडों ( राजा शिष्यों ) को पञ्चद्राविड भाषाके मंत्रोंका उपदेश किया था वह हमे कहिये । महादेवने कहा-अस्तु हे देवि ! अनघ ऐश्वर्य तथा सब साधकों को वाञ्छित फल देनेवाला सिद्धिदायक संमोहन मन्त्र यह है—ॐ क्लीँ ऐं इत्यादि । यह सम्मोहनमन्त्र आदिनाथमत्स्येन्द्रने शिष्य गौडदेशके राजाको दिया था, इस मन्त्रसे अभिमन्त्रित अन्नपानादि परं संमोहन कारी होता हैं । सप्तमातृकाओंके समीप बैठ कर उनकी पूजा कर २१ दिन तक जपनेसे सिद्धि होती है । खाद्य पान चन्दन सिन्दूरादिविलेपन उद्धूलन परिधानादि वस्तु २१ वार अभिमन्त्रित कर देनेसे सम्मोहन होता है ।

अथ वक्ष्ये कुलेशानि भाषाकेरलमुत्तमम् ।
सद्यः सिद्धिकरं मन्त्रं नित्यनाथोदितं पुरा ॥५॥

केरलमन्त्रो यथा—ॐ क्लीं सकलजगन्मोहिनि ह्रीं मलयाल-भगवति सकलसम्भूतसम्मोहिनि क्लीं कोडूमारूँ वुद्धि कडुतु पूमाक्कि कोडवा मलयाल भगवति कोडुवा ईश्वराणे । उमक् उमाणे उमच्छु मुपतु मक्कोटि देवा क्वलाणे कोडुवा मलयालं भगवति क्लीं गुरुप्रसादं ।

केरल्लावारसन्नाम्ने शिष्याय कुलसुन्दरि ।
उक्तवान् नित्यनाथोऽसौ सर्वसिद्धिप्रदं कलौ ॥६॥
पूर्ववन्मातृकां चैतामर्चयेत्कुलसुन्दरि ।
अर्चयेन्मातृकां चैव सद्यः सिद्धिकरीं पराम् ॥७॥
खाद्यपानीयवस्तूनि विविधानि कुलेश्वरि ।
मन्त्रितं भक्षितं पुंसां वशीकरणमुत्तमम् ॥८॥
तरुबीजञ्च जातीनां मन्त्रेणानेन पार्वति ।
सम्मोहनं भवेत्सत्यं किं पुनर्मानवैः सह ॥९॥

अनेन मन्त्रेणैकविंशतिवारमुत्तराभिमुखं भस्मचन्दनाक्षता-दीन्यभिमन्त्र्य धार्यमाणे स्त्रीपुरुषराजानो वश्या भवन्ति ।

अब पार्वतीपुत्र नित्यनाथ मत्स्येन्द्रकथित तत्काल सिद्धिदायक केरलभाषाका शाबरमन्त्र कहेंगे ॐ क्लीँ—इत्यादि केरल्लावार नामके शिष्यको नित्यनाथने सर्वसिद्धिकारक मन्त्रोपदेश दिया है । पूर्ववत् सर्वसिद्धिकारी मातृकाकी पूजा कर खान पानकी अनेक प्रकारकी वस्तु अभिमन्त्रित कर खानेसे उत्तम सम्मोहन होता है । वृक्षलता अन्नादि बीज स्थावरभी मोहित हो जाते हैं मानव जातिकी बातही क्या ?॥
इस मन्त्रसे २१ वार उत्तरमुख होकर भस्म चन्दन अक्षतादि अभिमन्त्रित कर धारण करनेसे स्त्री पुरुष राजा इत्यादि वश्य होते हैं ।

( ईश्वर उवाच )—अथ वक्ष्ये कुलेशानि नित्यनाथेन सादरात् ।
कर्णाटयोगिराजं तु मन्त्रितं तत्सुपावनम् ॥ १० ॥

ॐ नमो भगवते (ति) मदनमोहमये पञ्चभूतमोहिनि चतुर्विध जीव गलनु मोहिसु २॥ तन्नो नो उदेकंण तुरित व्यतलिन्नकाणा कालुकै। प्याडदे कल बहु दिवोडि वरलि वार दिद्दरे महामायाणे काल भैरवराणे ब्रह्म विष्णु महेश्वरणे श्रीराम ईत्तनाणे क्लीं मोहिनि मोहिसु २। निंनेगे निन्नाणे मोहिसु ॐ गुरुप्रसादं।

अयं कर्णाटको मन्त्रो योगिनामपि दुर्लभः।
त्रिःसप्तमन्त्रितं भस्म मोहनं देवरक्षसाम् ॥ ११ ॥
प्रातरुत्थाय देवेशि मन्त्रितं जलपानतः।
तद्वषः (शः=द्रव) श्रवणादेव मोहनं भवति ध्रुवम् ॥१२॥

अनेन मन्त्रेणैकविंशतिवारं विभूतिमुदकमभिमन्त्र्य पाने क्रियमाणे सकलजनमोहनं भवति। खर्जूरमुदकमध्ये निक्षिप्य तदुदकमेकविंशतिवारमभिमन्त्र्यापेक्षितस्य पुरुषस्य दत्ते, आमरणान्तमोहनं भवति।

नित्यनाथ लोकेश्वर मत्स्येन्द्रने कर्णाटकके राजा अपने शिष्य योगिराजको उपदिष्ट पावन शाबर मन्त्र—ॐ नमो—इत्यादि यह कर्णाटक मन्त्र योगियोंको भी दुर्लभ है। २१ वार अभिमन्त्रित भस्म देवता राक्षस आदियोंका भी मोहन करता है, मनुष्यों की तो वात ही क्या ? प्रातः उठकर पूर्वोक्त प्रकार मन्त्रित जलपानसे उसका शब्द सुनने मात्रसे निश्चित मोहन होता है। इस मन्त्रसे २१ वार विभूति जल आदि अभिमन्त्रित कर पान करनेसे सकल जनका मोहन होता है। खजूरको जलमें डाल कर उस जलको २१ वार अभिमन्त्रित कर अभीष्ट मनुष्यको देनेसे मरण पर्यन्त मोहन होता है।

अतः परं महेशानि भाषागुर्जरमन्त्रकम्।
वक्ष्ये संमोहनार्थञ्च नित्यनाथेन निर्मितम् ॥१३॥

ॐ क्लीं सकलजगन्मोहिनि पञ्चभूतपञ्चितसपञ्चतत्त्वे चतुर्विधजीवान् मोहय आणो पगुतले चमेनु बाधो मोहि वश्य

करो न करे तो हनुमत की आण, कालभैरवकी आण, तेरी शक्ति मेरी भक्ति फुरो मन्त्रका (ल) रुद्र ।

मातृकामर्चयेदादौ प्रजपेन्मन्त्रनायकम् ।
मोहनञ्च भवेत्सिद्धं शिवस्य वचनं यथा ॥ १४ ॥
लौकिकाग्नौ तु तेजस्वी मन्त्रेणानेन साधकः ।
मध्वाक्तं मल्लिकापुष्पं जुहुयान्नामसंयुतम् ॥ १५ ॥
अष्टोत्तरशतेनैव कुक्कुटासनपूर्वकम् ।
अत्यन्तशत्रवः शीघ्रं मोहिताश्च भवन्ति हि ॥ १६ ॥
आरनालं मथित्वा तु अन्नभाण्डे विनिक्षिपेत् ।
तदन्नभक्षकः सर्वः सद्यः सम्मोहितो भवेत् ॥ १७ ॥

आरनालं शतवारं मन्त्रयित्वाऽन्ने निक्षिप्य सप्त दिनानि भक्षणे मोहिता भवन्ति ।

यहाँसे महाप्रकाश नित्यनाथमत्स्येन्द्रनिर्मित गुर्जरभाषाका सम्मोहन शाबरमन्त्र–ॐ क्लीं–इत्यादि । प्रथम मातृकाओंकी पूजा कर मन्त्रोंके नायक सिद्धशाबरका जप करे संमोहनसिद्धि उसी प्रकार होती है, जैसे शिवका वचन । इस मन्त्रसे तेजस्वी साधक लौकिक अग्निमें साधकका नाम लेकर मधुमिश्रित मल्लिकापुष्पका हवन करे । इस प्रकार कुक्कुटासनसे अठोत्तरसौके नियमसे हवन करनेसे अत्यन्त शत्रुभी शीघ्र मोहित हो जाते हैं । काञ्जीको मंत्रसे मथकर अन्नभाण्डमें छिड़क देनेसे उस अन्नको जो जो खाता है, वह वह तत्काल मोहित हो जाता है । सौवार काञ्जीको अभिमन्त्रित कर अन्नमें क्षेपण कर उसको ७ दिन मात्र खानेसे ही मोहित हो जाते है ।

आन्ध्रशाबरमन्त्रञ्च महाश्चर्यकरं परम् ।
वक्ष्येऽहं तव देवेशि नित्यनाथोदितं पुरा ॥ १८ ॥

ॐ नमो भगवति सकलजगन्मोहिनि पञ्चितपञ्चबाणपञ्चतत्त्वे क्लीं एहि २ क्लीं चतुर्विधजीवुलुन्मोहि चकुंटिकानि कुनीमाननीकु वीरभद्रनाननीकुमुप्यै । मुकाटि देव तुला न त्रिमूर्त्तुलान आदिशक्तिं इंननाकु मोहि पंचाय कुंटे क्लीं संमोहिनीक्लीं गुरु प्रसादं ।

आन्ध्रशाबरमन्त्रञ्च अत्याश्चर्यकरं परम् ।
स्मरणान्मोहनं सर्वजनैर्वैरसमन्वितैः ॥ १६ ॥
एतन्मन्त्रेण देवेशि समुक्तं करवीरकम् ।
होमयेत्पूर्वमन्त्रेण मन्त्रितं (न्त्रान्ते) साधकोत्तमः ॥२०॥
त्रिदिनाद्राजपुत्रो वा राजा वा शत्रवस्तथा ।
कांक्षितं कन्यका वाथ सम्मोहनकरं परम् ॥ २१ ॥

अनेन मन्त्रेण साधकनामपूर्वकं शतवारं रक्तकरवीरकुसुमानि लौकिकाग्नौ वैदिकाग्नौ वा जुहुयात् वश्या भूता सा कांक्षितं ददाति ।

इति सन्मोहिनी विद्या पञ्चद्राविडमुच्यते ।
योगैरनेकतपसा साध्यं सन्मनुना भवेत् ॥ २२ ॥

इति श्रीपार्वतीपुत्रश्रीनित्यनाथसिद्धमत्स्येन्द्रविरचिते शाबरचिन्तामणौ तृतीयः पटलः ॥

पुरा कालमें पार्वतीपुत्र नित्यनाथमत्स्येन्द्रोपदिष्ट—ॐ नमो भगवति—इत्यादि आन्ध्र शाबरमन्त्र बड़ा आश्चर्य कारक स्मरण मात्रसे वैरियोंकाभी मोहन करता है । इस मन्त्रसे समुक्त करवीरको पूर्ववत् हवन करे । तीन ही दिनमें राजा राजपुत्र कन्या प्रभृति वाञ्छित साध्यका सम्मोहन करता है । इस मन्त्रसे साधक नाम पूर्वक सौवार रक्त करवीर पुष्पोंको लौकिक या वैदिक अग्निमें हवन करे । वशीभूत होकर वह मोहिनी विद्या मनोवाञ्छित फल देती है । यह मोहनी विद्यापञ्च द्राविड कहलाती है । अनेक योग तपस्या तथा सद्मन्त्र द्वारा साध्य होता है ॥

## चतुर्थः पटलः

महामायामयं वीरं...... । ..........................वचः ॥
पार्वत्युवाच—नमस्ते गिरिजानाथ नमः पन्नगभूषण ।
वशीकरणयोगञ्च वद मे करुणाकर ॥ १ ॥
ईश्वर उवाच—वशीकरणयोगञ्च वक्ष्येऽहं तव सुव्रते ।
अत्यन्तसुगमं देवि सर्वसिद्धिप्रदं नृणाम् ॥२॥

गौडं मन्त्रं प्रवक्ष्यामि श्यामलाख्यं सुपावनम् ।
यस्य स्मरणमात्रेण त्रैलोक्यं वशमाप्नुयात् ॥३॥

ॐ ऐं क्लीं सौं सर्वजनमनोहारिणि मतङ्गकुलमङ्गलाङ्कि असकृन्मदिरामोदवदने अनौपम्यचरिते ऐं क्लीं ह्लीं गुलामातङ्गि जनमनोरञ्जनकारि मनभेदि भगवति गुर्वुक्तिकामगति फुरो ईश्वर मन्त्रते वीरवाचा ।

एतन्मन्त्रवरं देवि प्रजपेत्कालिकालये ।
अथवा मातृकास्थाने चण्डिकापुरतोऽपि वा ॥४॥
कृष्णाष्टमीसमारभ्य यावत्कृष्णचतुर्दशी ।
त्रिकालं तु कुलेशानि जपेच्छतमतन्द्रितः ॥५॥
अर्चयेत्करवीरेण चण्डिकामूलमन्त्रतः ।
मन्त्रसिद्धिमवाप्नोति निग्रहानुग्रहप्रदाम् ॥६॥
एतन्मन्त्रेण गिरिजे चन्दनं भस्मकं तथा ।
मन्त्रितं धारयेद्देवि त्रैलोक्यं वशमानयेत् ॥७॥
नित्यमष्टोत्तरशतं जप्त्वा मन्त्रं सुपावनम् ।
यत्र कुत्र गतो वापि कार्यसिद्धिमवाप्नुयात् ॥८॥

अनेनैकविंशतिवारं विभूतिचन्दनाक्षतादिकमभिमन्त्र्य धारयेत्सर्वे वश्या भवन्ति ।

वशीकरण योग मनुष्यों को सर्वसिद्धिप्रदायक अत्यन्त सुगमश्यामल-नामक पावन गौडशाबर मन्त्र है । ॐ ऐं क्लीं इत्यादि ।—जिसके स्मरण मात्र से तीनों लोकवश में हो जाते हैं । इस मन्त्र का जप कालिका मातृका या चण्डिका के मन्दिर में कृष्णाष्टमी से आरम्भ कर कृष्ण चतुर्दशी पर्यन्त त्रिकाल शत संख्या सावधान होकर जप करे । चण्डिका मूलमन्त्र से करवीर पुष्पोंसे पूजा करे । निग्रहानुग्रहदायक मन्त्रसिद्धि होती है । इस मन्त्र से मन्त्रित चन्दन भस्म आदि धारण कर त्रैलोक्य को वश करे । नित्य अष्टोत्तरशत जपकर जहां कहीं भी जाये कार्यसिद्धि अवश्य होती है । इससे २१ वार विभूति चन्दन अक्षत सिन्दूरादि अभिमन्त्रित कर धारण करे सब वश्य होते हैं ।

केरलन्तु महामन्त्रं शाबरं सर्वकामदम् ।
वक्ष्ये ऽहं तव देवेशि सर्वलोकोपकारकम् ॥९॥

ॐ क्लीं मलयालमातङ्गि मर्नासिजकोटिलावण्ये मध्वामोद-वदने ऐं क्लीं मातङ्गेश्वरि वरमा कोडु वाउ (ड) मुकुवीर वीर-भद्राणें । विरूपाक्षनाणें । आदिभैरव आज्ञा । ॐ गुरुप्रसादं ।

एतत्ते केरलं मन्त्रं यक्षविद्याधरैरपि ।
अलभ्यं गिरिजे देवि प्रजपेच्चण्डिकालये ॥१०॥
शुक्लपक्षे समारम्य पञ्चम्यां भौमवासरे ।
त्रिशतं प्रजपेन्नित्यं दशमेऽन्हि समापयेत् ॥११॥
मन्त्रसिद्धिमवाप्नोति नात्र कार्या विचारणा ।
एतन्मन्त्रेण गिरिजे चन्दनं तु त्रिसप्तधा ॥१२॥
मन्त्रितं धारणं कुर्याद् द्वेधा पञ्चाङ्गलेपनात् ।
दृष्ट्वा स्पृष्ट्वा नरो नारीं त्रिदिनाद्वशमानयेत् ॥१३॥

सब लोगों का उपकार करने वाला, समस्त कामनाओं को देनेवाला केरल शाबरमहामन्त्र यह है—ॐ क्लीं मलयाल–इत्यादि । यह केरल-शाबरमहामन्त्र यक्ष विद्याधरादियों को भी अलभ्य है । इसका जप चण्डिका के मन्दिर में शुक्लपक्ष पञ्चमी मङ्गलवार से प्रारम्भ कर नित्य तीन सौ जप कर दशम दिन में समाप्त करे मन्त्रसिद्धि अवश्य मिलती है । इसमें कोई सन्देह नहीं । इस मन्त्र से चन्दन को २१ वार मन्त्रित कर धारण करे दो प्रकार से पञ्चाङ्ग लेपन करके देखने से स्पर्श करने से नर नारी को तीन दिन में वश कर लेता है ।

कर्णाटमन्त्रं वक्ष्यामि कलौ सिद्धिप्रदं नृणाम् ।
आदिनाथेन कथितमत्यन्तं सुखदं प्रिये ॥१४॥

ॐ क्लीं श्यामले विमले शरदिन्दु ोटिप्रमुखे मतङ्गऋषिजे मङ्गलाङ्गि नन सिल्लम पुनिने याद । महादेवी चदुर्विध जीवकुल वश माडू मादिदरे मल्लिकार्जुननाणें, महाशक्त्याणें । मलयालं भगवत्याणें । ॐ गुरुप्रसादं ।

एतत्कर्णाटकं मन्त्रं सद्यः सिद्धिकरं परम् ।
दुर्गालये जपेन्मन्त्रं नित्यमष्टोत्तरं शतम् ॥१५॥

शुक्लप्रतिपदारभ्य नवम्यां तं समापयेत्।
मन्त्रसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥१६॥
मन्त्रेणानेन देवेशि मन्त्रितं तोयपानतः।
नरनारीपक्षिमृगा ये च जीवसमुद्भवाः ॥१७॥
भवेद्वश्यमनो वश्या राजानो वापि पार्वति।
शर्करा मन्त्रिता देया स्त्री वश्या नात्र संशयः ॥१८॥

आदिनाथ मत्स्येन्द्रकथित सिद्धिदायक कर्णाटक शाबर मन्त्र अत्यन्त सुखदायक है—ॐ क्लीं श्यामले—इत्यादि मन्त्र को दुर्गामन्दिर में नित्य १०८ वार जप करे तत्काल सिद्धि होती है। शुल्क प्रतिपदा में प्रारम्भ, ६ मी में समाप्ति करे। मन्त्रसिद्धि अवश्य होती है। इसमें संशय नहीं। इसके सिद्ध होने पर मन्त्र से मन्त्रित जलपान करनेसे नर नारी पशु पक्षी मृग समस्त जीव जन्तु राजा आदि वश्य होते हैं। शक्कर को मन्त्रित कर देने से स्त्री वश्य होती है। इस में संशय नहीं है।

अत्यन्तसुगमं मन्त्रं पाठात्सिद्धिप्रदं नृणाम्।
शाबरं गुर्जरं मन्त्रं शश्वज्जपफलप्रदम् ॥१६॥

ॐ नमो भगवति उग्ररूपिणि उज्जयीनीमहाकालि उरुतन (र) वशीकरप्रदे क्लीं जीवराशिकुं आणो मेरे पगतरे करो मेरे वश्य २ न करो तो आदि भैरव के आंण रामचन्द्र की आंण ॐ गुरुप्रसादं।

एतद्गुर्जरमन्त्रञ्च प्रजपेद्वेणुकालये।
अयुतात्सिद्धिमाप्नोति शिवस्य वचनं यथा ॥२०॥
हरिद्राकज्जलं चैव मन्त्रितं धारणात् प्रिये।
पतिवश्यकरं स्त्रीणां विना रूपेण पार्वति ॥२१॥
ताम्बूलस्रग्विभूषादि वननिनेन पार्वति।
स्त्रीवश्यं निश्चितं लोके शिवस्य वचनं यथा ॥२२॥
आन्ध्रं मन्त्रं प्रवक्ष्यामि सद्यः सिद्धिकरं तथा।
नित्यनाथेन सिद्धेन यदुक्तं तत्तथैव हि ॥ २३ ॥

ॐ नमोऽस्तु मातङ्गि राजराजसुखपूजिते रत्यचिति। ॐ ह्रीं

जगत्त्रयव्यापकुं राजपिनकुं सद्धितारालयिन । ॐ श्यामल रक्त श्यामल सकल जुवुलानकुं वश्यं चेॉप चायकुंटि वामीकुनियान्नी यादिशक्तियन कालभैरवु नान कालरुद्र नानावश्य चेयि । ॐ. गुरुप्रसादम् ।

एतदान्ध्रमयं देवि भाषाधारणमेव च ।
मन्त्रराजं कुलेशानि सर्वसिद्धिकरं नृणाम् ॥ २४ ॥
हस्ते च भानुवारे च प्रारभेन्मन्त्रमादरात् ।
सप्त च प्रजपेद्रात्रौ शतमष्टोत्तर प्रिये ॥ २५ ॥
एवं चार्कदिनान्ते तु ब्राह्मणः प्रजपेत्प्रिये ।
मन्त्रसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ २६ ॥
किञ्चिद्रक्तं समादाय मन्त्रयेत्पार्वति स्वयम् ।
तद्रक्तं निक्षिपेत्कूपे ग्रामः सर्वो वशीभवेत् ॥ २७ ॥

इतिश्रीपार्वतीपुत्रश्रीसिद्धनाथविरचितेशाबरचिन्तामणौचतुर्थःपटलः

लोकेश्वर नित्यनाथसिद्ध मत्स्येन्द्रोक्त तत्काल सिद्धिदायक आन्ध्र शाबर मन्त्र-ॐ नमोऽस्तु मातङ्गि—इत्यादि भाषा धारण मन्त्रराजको आदरपूर्वक रविवार हस्तनक्षत्रमें प्रारम्भ करे १०८ की सात माला रात्रिमें जपे । एवं दूसरे रविवार तक जपनेसे मन्त्रसिद्धि अवश्य होती है । स्वयं थोडा रक्त लेकर मन्त्रित कर कूवेमें डालेतो सारा ग्राम वशीभूत होता है ।

## पञ्चमः पटलः

वर्णात्मकं वर्णमयं ·····महोग्र······वचः ।······
पार्वत्युवाच कैलासशिखरावास कालकण्ठ कपालभृत् ।
अधुना शाबरं मन्त्रमादिनाथोदितं वद ॥ १ ॥
ईश्वर उवाच— अद्भुताद्भुतं मन्त्रमनौपम्यमगोचरम् ।
मीननाथप्रणीतञ्च वक्ष्येऽहं तव सुव्रते ॥ २ ॥

ॐ नमो भगवति श्मशानवासिनि सकलभूतभयङ्करि सर्वोच्चाटनकारिणि कालरुद्रने क्रोधने वश(क)रि उल महाशक्ति नातो निदवर उच्चाटन माडु माडु दिद्धने निनगे कालरुद्रनाणें कञ्चिका

मद्रियाणे कावेरी जम्बुकेश्वर नाणें। ॐ गुरुशक्ति ह्रीं गुरु-प्रसादम्।

शावरोच्चाटनं मन्त्रं कर्णाटाख्यं सुपावनम्।
नग्नेन प्रजपेन्मन्त्रं सिद्धिर्भौमे च साधकः॥ ३॥
षट्सहस्रं जपेन्नित्यं कुक्कुटासनयोगतः।
दक्षिणाभिमुखो भूत्वा मन्त्रसिद्धिमवाप्नुयात्॥ ४॥
तदारभ्य तु देवेशि मध्येन मनुसाधकः।
ग्रस्तं कृत्वा महेशानि प्रजपेन्निशि चैव हि॥ ५॥
वाणसंख्यासहस्रात्तु कार्यसिद्धिमवाप्नुयात्।
काकोलूकदलं चैव जुहुयात्साधको निशि॥ ६॥
प्रेताग्निनाथवा देवताजिकक्षानलेन वा।
वन्हिना जुहुयान्मन्त्री ह्युच्चाटनकरं परम्॥ ७॥
प्रेतभस्म समादाय मन्त्रेणानेन साधकः।
शतवारं मन्त्रितं तु भौमवारे तु बुद्धिमान्॥ ८॥
शतं मूर्ध्नि क्षिपेद् भौमे यमघण्टकवेलया।
सत्यमुच्चाटनं सद्यः शिवस्य वचनं यथा॥ ९॥

पार्वतीने कहा हे कैलासवासी नीलकण्ठ! आदिनाथ मत्स्येन्द्र उपदिष्ट शाबर मन्त्र कहिये। महेश्वरने कहा हे सुव्रते! मीननाथप्रणीत अनुपम अगोचर अद्भुतसे भी अद्भुत—ॐ नमो भगवति—इत्यादि कर्णाट शावर उच्चाटन मन्त्र कुक्कुटासनसे दक्षिण मुख होकर और भौमवार से नित्य नग्न होकर ६ हज्जार जप करे, मन्त्र सिद्धि होती है। मन्त्रसाधक उससे आरम्भ कर मध्यम ग्रस्त कर रातको जपे, बाण संख्या (५०००=मन्त्र संख्या) हज्जारसे कार्य सिद्धि होती है। श्मशानाग्नि देवताग्नि रणाग्नि वनतृणाग्निमें रातको काक उल्लूके पंख हवन करे, उच्चाटन अवश्य होगा। बुद्धिमान साधक इस मन्त्रसे मंगलको मुर्दे का भस्म लेकर १०० वार अभिमन्त्रित कर फिर मंगलको यमघण्ट वेलामें सौ वार सिरमें डाले, अवश्य उच्चाटन होता है। जैसे शिवका वचन।

वक्ष्ये महामहोमन्त्रं भाषाद्राविडमेव च।

स्मरणात्सिद्धिमाप्नोति नित्यनाथेन निर्मितम् ॥ १० ॥

ॐ कालि २ महाकालि २ ग्लौं कालरात्रि कान्हेश्वरि एहि २ अमुकमुच्चाटय २ देश लुलुं तोर दादि इरंदाल देवि आणें। पूतो-लुंतोरतादिरंदालू उमा महेश्वररायों। विष्णु तोर तामलु इरंदाल वीरभद्र। ॐ कालि २ महाकालि कालरात्रि। ॐ गुरुप्रसादम्।

एतत्ते केरलं मन्त्रं सर्वमन्त्रोत्तमोत्तमम्।
स्मरणात्सिद्धिदं पुंसां सदाचारविवर्जिते ॥ ११ ॥
एकवीरालये वापि कालिकालय एव च।
चण्डीस्थानेऽथवा देवि सन्मनुं प्राप्य बुद्धिमान् ॥१२॥
रात्रौ चैवार्चनं कृत्वा जपेदर्कशतं प्रिये।
मल्लिकाकुसुमेनैव चार्चयेदुपचारतः ॥ १३ ॥
सप्त रात्रेण सिद्धिः स्याच्छिवस्य वचनं यथा।
तदारभ्य तु देवेशि (राजिकालवणैकुर्नेत्) न च ॥१४॥
सहस्रात्कार्यसिद्धिः स्यान्नात्र कार्या विचारणा।
अथवा मन्त्रराजस्य त्रिसहस्रात्कृतार्थता ॥ १५ ॥
कण्टकं परपुष्टोत्थं मन्त्रितं शतमादरात्।
निक्षिपेदरिसदने पश्चादुच्चाटनं भवेत् ॥ १६ ॥
काकोलूकदलं चैव मन्त्रेणानेन बुद्धिमान्।
शतवारं मन्त्रयित्वा रिपुगेहे तु गोपयेत् ॥ १७ ॥
विप्रचाण्डालयोः शल्यं तद्भस्म च रवौ दिने।
साधितं रिपुगेहे तु निक्षिपेद्रविवासरे ॥ १८ ॥
पश्चादुच्चाटनं चैव भवत्येव न संशयः।
अथवा निम्बकीलन्तु यमयोगे तु साधकः ॥ १९ ॥
निशि शत्रुगृहे स्थाप्य गृहोच्चाटनकारकम्।
अर्ककीलमयं तद्वद् ह्युच्चाटनकरं भवेत् ॥ २० ॥
अथ पत्रं रवौ ग्राह्यं मन्त्रितं शतधा प्रिये।
कुबेरसदृशः शत्रुर्दरिद्रो भवति ध्रुवम् ॥ २१ ॥

नित्यनाथनिर्मित स्मरणमात्रसे सिद्धिदायक द्राविड भाषा

का ॐ कालि-कालि इत्याति शाबर महामहोमन्त्र................।
स्मरण मात्रसे सिद्धि दायक सव मन्त्रोंमें उत्तमोत्तम इस केरल शाबर मन्त्र को एकवीरालय ( निर्जन स्थान ), कालिका मन्दिर, चण्डिका मन्दिरमें रात्रीको पुजा कर द्वादश शत्त संख्या जपकर मल्लिका पुष्पसे उपचार सहित पूजा करे। सात ही रात्रिमें शिवके वचन प्रमाण सिद्धि होगी। पूर्वोक्तारम्भसे राई नमकका सहस्राहुति हवन कर कार्यसिद्धि होती है। इसमें कोई विकल्प नहीं या मन्त्रराजके ३ हजारजपसे कृतार्थता होती है। कोयलका कन्टक ( बीठ ) सौवार अभिमन्त्रित कर शत्रुके घरमें फेंकनेसे पक्षमात्रमें उच्चाटन होता है। काक तथा ऊल्लूके पंखोंको इस मन्त्रसे सौवार मन्त्रित कर शत्रुके घरमें रविवारको छिपा देनेसे—पूर्ववत् उच्चाटन होता है। विप्र तथा चाण्डालका शल्य ( विष्ठा ) या उनका भस्म रविवारको लेकर मन्त्रसे साधितकर रविवारको ही शत्रुगृहमें फेंकदेनेसे १५ दिनमें उच्चाटन होता है। इसमें संशय नहीं। अथवा नीमका कील यमयोगमें रातको शत्रुके घरमें ठोक देनेसे गृहोच्चाटन होता है। अथवा पत्ते लेकर रविवारको १०० वार मन्त्रितकर शत्रुगृहमें फेंकदेनेसे कुवेर तुल्य धनी भी तुरन्त दरिद्र होजाता है।

एतद्योगश्च देवेशि नराणां दुर्लभः कलौ।
गौडशाबरमन्त्रश्च सद्य उच्चाटनः परः ॥२२॥
सर्वशत्रुविनाशश्च पाठात्सिद्धिकरो नृणाम्।

ॐ नमो भगवति विरूपाक्षि विकृतवदने घोररूपे जनं धनालु करि सर्वोच्चाटिनि घरचारु चडायुगापदे शिखाडावो आद्रं। आदिमाताके आंणु छुडावुं कालभैरवके आंणु। घुडावो कालरुद्र के आंणु। घुडाचो मेरी भक्ति गुरुकी शक्ति फुरो मन्त्र ईश्वरो वाचा। ॐ गुरुप्रसादम्।

एतं मन्त्रं कुलेशानि जपेद्दुर्गालये निशि।
चन्द्रसूर्यग्रहे वापि प्रजपेत्साधकोत्तमः ॥२३॥
मन्त्रसिद्धिमवाप्नोति नात्र कार्या विचारणा।
मन्त्रेणानेन देवेशि रवौ चाश्वत्थसम्भवम् ॥२४॥

कीलं वा निम्बकीलं वा चार्ककीलमथापि वा।
काकालये प्रेतरज्जुः प्रेतान्नं काष्ठमेव वा ॥२५॥
षट्सहस्रं मन्त्रयित्वा रवौ वारे तु बुद्धिमान्
रात्रौ रिपुगृहे स्थाप्य सद्य उच्चाटनं भवेत् ॥२६॥

यह योग कलिमें मनुष्योंको दुर्लभ है। गौड शाबर मन्त्र पाठ मात्रसे सिद्धिकारक सर्वशत्रुविनाशक तत्काल उच्चाटनकारी ॐ नमो भगवति–इत्यादि—इस मन्त्रको दुर्गामन्दिरमें रात्रिमें या चन्द्र सूर्य ग्रहणमें साधक जप करे, मन्त्रसिद्धि अवश्य होती है। इस मन्त्रसे रविवार को पीपल नीम या आकका कील काकके घोंसलेमें प्रेतरज्जु प्रेतान्न या प्रेतकाष्ठको ६ हजार वार अभिमन्त्रित कर रविवारकी रात्रीको शत्रुगृहमें रख दिया जाय तो तत्काल उच्चाटन होता है।

आन्ध्रं मन्त्रं प्रवक्ष्यामि सद्यः सिद्धिकरं नृणाम्।
स्मरणाद्वैरिवर्गस्य प्रोच्चाटनकरं परम् ॥२७॥

ॐ नमो भगवति वराहवदने ग्लौं करालि ह्रीं शोणित-भोजने पीर्यरटव्याणि पशुग्रासमर्विस्ति सिस्तुं त्रांगु मांसं तिनु भेदस्सु भक्षि चुदेशोच्चाटनं चेपि चापकुंटि वानीकु कालरुद्राण कल्याण वीरभद्रना यज्ञवराह मूर्ति याण। ॐ गुरुप्रसादम्।

अयमान्ध्रमयो मन्त्रो योगिनामपि दुर्लभः।
मातृकामर्चयेद्रात्रौ षट्सहस्रं जपेन्मनुम् ॥२८॥
बलिञ्च कुक्कुटं दद्यान्मन्त्रसिद्धिर्भवेद् ध्रुवम्।
सर्पमण्डूकशल्यं वा मूषकोत्थं विडालजम् ॥२९॥
शल्यं वा काकोलुकास्थि मृगश्वानास्थिनैव वा।
यद्यद्वैरेण संयुक्तं जन्तोश्च रजश्चास्थि वा ॥३०॥
मन्त्रेण मन्त्रितं देवि षट्सहस्रन्तु साधकः।
उच्चाटनं सप्तरात्रान्नात्र कार्या विचारणा ॥३१॥

इतिश्रीपार्वतीपुत्रश्रीनित्यनाथविरचिते शावरचिन्तामणौ पञ्चमः पटलः॥

